# YOGATANTRA-GRANTHAMĀLĀ

*Vol. V*



**General Editor**

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ, 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.




# MAHĀRTHAMAÑJARĪ

OF

## MAHEŚVARĀNANDA

with

THE AUTO-COMMENTARY PARIMALA

**Edited by**

**Pt. Vrajavallabha Dviveda,** Darśanācārya,
Head of the Department of Yogatantra,
Varanaseya Sanskrit Vishvavidyalaya, Varanasi.

VARANASI
**1972**

योगतन्त्र-ग्रन्थमाला
( ५ )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थान-सञ्चालकः
वाराणसेयसंस्कृतविश्वविद्यालये

महेश्वरानन्दप्रणीता

# महार्थमञ्जरी

स्वोपज्ञपरिमलाख्यव्याख्योपेता

सम्पादकः
प० व्रजवल्लभद्विवेदः, दर्शनाचार्यः
योगतन्त्रविभागाध्यक्षः
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी




वाराणस्याम्
२०२९ तमे वैक्रमाब्दे १८९४ तमे शकाब्दे १९७२ तमे खिस्ताब्दे

# विषय-सूची

प्रथमं संस्करणम्
मूल्यम्—(१७) ५० सार्धसप्तदशरूप्यकाणि

प्राप्तिस्थानम्—
प्रकाशनविभागः
वाराणसेयसंस्कृतविश्वविद्यालयः,
वाराणसी–२



# विषय-सूची

## अनुक्रमणीभागः





# प्रास्ताविकम्

गोहर्यादयः शब्दा बह्वर्था इति ख्यातिः संस्कृतज्ञसमाजे श्रूयते चिरात्। तन्त्रशब्दस्तु पञ्चविंशतिसंख्यातोऽप्यधिकेष्वर्थेषु प्रयुज्यते। नेतोऽधिका अर्था अन्यस्य कस्यचिच्छब्दस्य। एतस्य मूले विस्तारार्थकः √तन् धातुर्विराजते। अस्मादेव धातोस्तन्त्रशब्दवत् तन्तुशब्दोऽपि निष्पद्यते। तन्त्रशब्दः पुनर्धातूभूय चुरादौ प्रयुक्तः। वस्तुतः स नामधातुत्वेनाङ्गीकरणीयो भिन्नार्थकः। जीविकोपार्जनोपायेषु तन्तुरूपस्य तन्त्रस्य बाहुल्येन प्रयोग इति कुटुम्बधारणार्थश्चुरादौ। तेषूपायेषु कृषिः ('सिरीस्तन्त्रं तन्वते अप्रजज्ञः'—ऋ० १०, ७१, ६), वपनसाधनम्—(स्त्रियौ तन्त्रे अधिरोप्य पटं वयन्त्यौ—महाभार० १, ३, १४४) इत्यादयः प्राधान्यं भजन्ते। परतः कुटुम्बधारणात्मके व्यवसाये कुलप्रतिष्ठादिकस्थितिः संजाता (महाभार० १३, ४८, ६)। जीविकोपार्जनोपायार्थेषु प्रयुज्यमान उपायमात्रार्थको जातस्तन्त्रशब्दः। पश्चाच्च प्रबन्धः, स्वराष्ट्रचिन्ता, अर्थसाधनम्, सैन्यम्, धनम्, गृहम्, इतिकर्तव्यता, हेतुः, व्यवहारः, नियमादिः, सिद्धान्तः, ओषधिः, शास्त्रमित्यादयोऽर्था जाताः।

कात्यायनश्रौतसूत्रे (१ ७, १, ८) तु 'कर्मणां युगपद्भावस्तन्त्रम्' इत्याख्यातम्। प्रायश्चित्ततत्त्वे तु—'अनेकमुद्दिश्य सकृत् प्रवृत्तिस्तन्त्रता। यथा—आग्नेयाष्टाकपालेन्द्रदध्यैन्द्रपयोयागानां त्रयाणां सकृत् सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिद्ध्यति' इति। चतुःषष्टिसंख्यके शिवोक्तशास्त्रेऽपि तन्त्रशब्दप्रयोग एवमेवानेकमुद्दिश्य सकृत् प्रवृत्त्योपायनियमादिदर्शनेन जातः स्यात्। 'चित्रचित्तचिरत्वानां तन्त्रेणोच्चारणम्' 'इति (१२० पृ०) प्राकृतभाषाप्राबल्यात् तन्त्रेणोक्तम् (१४० पृ०) इति च प्रकृतग्रन्थे भिन्नोऽर्थः। स चान्येषु शास्त्रेष्वपि दृश्यते।

तन्त्रसंप्रदाये क्रमकुलप्रत्यभिज्ञाख्यानि त्रीण्यद्वैतदर्शनानि। पञ्चवक्त्रस्य शिवस्य विभिन्नेभ्यो मुखेभ्यः शैवागमा विनिर्गता इति शैवानां परम्परागतमिदं मतम्। क्रमदर्शनस्योपजीव्या आगमाः शिवस्योत्तरमुखोद्गता इति क्रमदर्शनम् औत्तराम्नायनाम्नापि प्रथितम्। तदुक्तं महार्थमञ्जर्याम्—औत्तराम्नायाद्यशेषशास्त्रार्थावबोधशिक्षाशालित्वात्' (६ पृ०); 'अर्थतत्त्वमुपादिक्षदौत्तराम्नायसंविदाम्' (१८६ पृ०); 'बभाषे तत्त्वमौत्तरम्' (१८६ पृ०)। उत्तरं मुखं वामतो भवतीति क्रमदर्शनप्रदर्शितो मार्गो वाममार्गः।

यद्यपि षष्टितन्त्रेण सांख्यशास्त्रं प्रसिद्धमेव, तथापीह महार्थमञ्जर्यां सप्ततिसंख्यायाः कारणम्—'सप्तसंख्योचितां मुद्रां बध्नती हस्तपल्लवे' इति सप्तसंख्यात्मकमुद्रानिबन्धन-

तात्पर्येण सप्ततिसंख्यानिर्बन्ध इति प्रकटितं श्रीमहेश्वरानन्देन। तेनैव चतुष्षष्टिशक्तिसमष्टौ श्रीरुद्ररौद्रेश्वर्याः संनिवेशेन निष्पद्यते सा संख्येति प्रतिपादितम्।

यद्यपि प्राकृतभाषानिबद्धत्वाद् इह बौद्धजैनादितन्त्रप्रभावो वक्तुं शक्यते, तथापि वेदोपनिषदादिष्वपि तन्त्राणाम् इङ्गितं प्राप्यते। बौद्धधर्मस्य ज्ञानयोगचर्यादिष्वप्यागमप्रभावः कदाप्रभृति जात इत्यपि न शक्यते निश्चयतो वक्तुम्। प्राचीनकालेऽपि बीजरूपतोऽवस्थितोऽयमागमोऽधिकारिभिरनुशील्यते स्म। असङ्गाचार्येण तुषितस्वर्गात् कृता तन्त्रस्यावतारणेति त्रिविष्टपेषु चीनेषु च प्रख्यातिः। तेन तु तन्त्रविद्याया अधिकारो मैत्रेयनाथेति नाम्नः सिद्धपुरुषात् प्राप्तः। बौद्धसाहित्ये गुह्यसमाज एव प्रथमतः शक्त्युपासनाया मूलं लक्ष्यते। मातृरूपेण कुमारीशक्त्युपासना तदा सर्वतोऽभूत् प्राप्तप्रचारा। तन्त्राणां रहस्यं न सर्वत्रोद्घाटनीयमिति शैवागमानामवतरणविषयेऽपि विज्ञायते। गुप्तसाधनाया अस्या धारा वैदिककालादपि पूर्वतः प्रावहत्। आर्यावर्ताद् बहिरपि मिस्र-क्रीट-मध्यैशियाप्रभृतिषु तदेयं प्रादुर्भूता। बौद्धतन्त्रस्य बहवो ग्रन्थास्त्रिविष्टपेषु चीनेषु च विद्यन्ते। तत्र आर्यमञ्जुश्रीमूलकल्पः, कालचक्रतन्त्रम्, श्रीसंपुटेत्याख्यं योगिनीतन्त्रम्, मूलतन्त्रम्, गुह्यसिद्धिरित्यादयो ग्रन्थाः। डाकार्णवेति ग्रन्थः प्रकाशित एव। वाराहीतन्त्रे शैवानां शाक्तानां बौद्धानां च प्रसिद्धानि तन्त्राणि परिगणितान्युपतन्त्रत्वेन—'बौद्धोक्तान्युपतन्त्राणि कापिलोक्तानि यानि च' इति। पञ्चरात्रागमा अपि तन्त्रान्तर्गता एव।

यूरोपीयैर्विद्वद्भिस्तन्त्रविषयका अनेके ग्रन्थास्तत्तद्देशीयासु भाषास्वनूदिताः। अभिनवगुप्तकृतः परमार्थसार आङ्ग्लभाषायामनूदितो बार्नेटमहोदयेन। क्षेमराजकृतं प्रत्यभिज्ञार्थहृदयं बाइरमहाशयेन जर्मनभाषायामनूदितम्।

## क्रमदर्शनम्

विकल्पसंस्कार एव निर्विकल्परूपपरतत्त्वज्ञानरूपाया मुक्तेरभ्युपायः। स तु क्रमेणैव भवति, न तु झटिति। अतोऽस्य नामधेयं क्रमदर्शनमिति जातम्। क्षेप-ज्ञान-प्रसंख्यान-गतिनाद-रूपाणि पञ्चकृत्यानि संपादयन्ती कालयेव परं तत्त्वम् इति नामान्तरमस्य 'कालीनयः' इत्यपि। शिवानुग्रहेणाक्रममेव भवति मोक्ष इति प्रत्यभिज्ञासिद्धान्तेऽनुग्रहस्यातीव महिमा विराजते। परन्त्विह सिद्धान्ते मोक्षः क्रमेणैव भवतीत्यनुग्रहशक्तिर्नोरीक्रियते क्रमदर्शने। इह विकल्पसंस्कारेण विना न भवति मोक्षः। साधकेन मनःस्थिरीकरणपूर्वकम् असारभूतानाम् अनपेक्षितानामंशानां दूरीकरणमेव क्रमनये विकल्पसंस्कारो ज्ञेयः। दर्शनस्यास्य सर्वसारः सिद्धान्तस्त्वद्वैतमेव। तदुक्तम्—'एतेन अद्वैतमेव सर्वसारः सिद्धान्तः' इति (४७ पृ०)। सांख्यसिद्धान्त इहापहासितः (५५-५६)। प्रकाश एव विश्वोपास्यदेवत्वेन समाश्रुतः।

## परम्परा

परम्परायां परमः समादरः प्रकटितो ग्रन्थकारेण ( १८० पृष्ठे ) गीतायाः—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ।।
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ।।
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ।।

इति श्लोकान् समुद्धरता । तत्रादावर्जुनवच्छिष्यभावेन प्रपत्तिः, शक्तिपातश्च ( १६६ पृ० )—

दीक्षया मुच्यते जन्तुः प्रातिभेन तथा प्रिये ।
गुर्वायत्ता तु सा दीक्षा बद्धबन्धनमोक्षणे ।।
सा च सर्वाध्वसंपूर्णमात्रसंविदभेदिना ।
गुरुणानुग्रहधिया शिष्ये यदवलोकनम् ।।

तत्र—आणवी, शाक्ती, शाम्भवीत्यादयो भेदा उक्ताः । 'तीव्रसंवेगानामासन्नः' इति दृशा शक्तिपातस्य तीव्रतीव्रतरत्वादयोऽपि भेदाः स्वयमूहनीयाः । पर्यन्ते तु—

'गुरुमत्तैव नः शास्त्रे परमं फलमुच्यते' ।

इत्ययं सारः । अतः प्रकृते ग्रन्थ आधिक्यतः स्वगुरोरात्मनश्च ग्रन्थानां पुष्कलान्युद्धरणान्युपन्यस्तानि । उपसंहारे ( ७० गाथायाम् )—

एनमेव महार्थं युद्धारम्भे पाण्डुपुत्रस्य ।
षोडशसहस्रशक्तिर्देव उपदिशति माधव इति शिवम् ।।

कृष्णार्जुनयोर्गुरुशिष्यभावं प्राधान्येन प्रकटयता गुरुकृपयैव शिष्योद्धार इति स्थापितम् ।

शोकमोहभ्रमैर्युक्तो मानवो न पारयते समनुष्ठातुं स्वेष्टम् । शोकमोहभ्रमापनोदायैव योगः प्रवर्तते । श्रीमद्भगवद्गीतायामपीदमेव तत्त्वम्—

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
**वेपथुश्च** शरीरे मे रोमहर्षश्च जायते ।।
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं **भ्रमतीव** च मे मनः ।।

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं **शोक**संविग्नमानसः ।। इति ।

योगशास्त्रेऽपि 'दुःखदौर्मनस्या**ङ्गमेजयत्व**श्वासप्रश्वासा विक्षेपसहभुवः' इति सूत्रेऽ-ङ्गमेजय-( वेपथु )-त्वादिविघ्नाः कीर्तिताः । गुरूपदेशप्रसादप्रसन्नेन गीतान्तेऽर्जुनेनोक्तम्—

नष्टो **मोहः** स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ।। इति ।

विप्रतिपन्नचित्तो मनुष्यो निश्चेतुं न पारयते किमपि । 'अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विन**ङ्क्ष्य**सि' इति तत्राहङ्कार एव मूलम् । तन्निरासार्थं भगवता गीतायां द्विरुपदिष्टम्—'मन्मना भव मद्भक्तो मद्याजी मां **नमस्कुरु**' इति । ततश्च 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति । श्रीमहेश्वरानन्देन ग्रन्थस्योपसंहारे प्रकारान्तरेणेदमेवाभिव्यक्तम् ।

## मूलग्रन्थः प्राकृतभाषायाम्

हेमचन्द्रस्य समये शौरसेनीप्राकृतस्य बहवो नियमा महाराष्ट्रीप्राकृतभाषाविषये प्रवर्तन्ते स्म । भरतस्य नाटचशास्त्रे नास्त्युल्लेखो महाराष्ट्रीप्राकृतभाषायाः । भासनाटकेषु महाराष्ट्रीप्रयोगा न दृष्टिपथमायान्ति । हेमचन्द्रेण, शुभचन्द्रेण श्रुतसागरेण चापि कृत आर्षप्राकृतभाषोल्लेखः, न तु महाराष्ट्रीप्राकृतभाषायाः । स्वकीये प्राकृतप्रकाशे शौरसेन्या लक्षणानामनन्तरं 'शेषं महाराष्ट्रवत्' ( १२, ३२ ) इत्यभिधाय महाराष्ट्री मुख्यप्राकृतत्वेनाङ्गीकृता । किन्तु नेममध्यायं भामहः स्वटीकया समलङ्कृतवान् इति नैषोऽध्यायः प्रामाणिकः । महाकविना दण्डिना महाराष्ट्रेषु भाष्यमाणा भाषा श्रेष्ठप्राकृतत्वेन मता, तस्याः सूक्तिरत्नाकरत्वात् सेतुबन्धस्य चास्यामेवोपनिबद्धत्वात् । एतेन महाराष्ट्रीप्राकृतस्य साहित्यसमृद्धिः सूच्यते । संस्कृतभाषानाटकेषु प्रथमतः कालिदासस्य स्वकीयेऽभिज्ञानशकुन्तलनाटके महाराष्ट्रीप्राकृतस्य प्रयोगा दृश्यन्ते । प्राक्तना अलङ्कारशास्त्रपण्डिता दण्डिवर्जिता महाराष्ट्रीप्राकृतानभिज्ञा आसन् । कर्पूरमञ्जर्या भूमिकायां डा० मनोमोहनघोषस्य मतेन ६०० खीस्ताब्दे महाराष्ट्रीप्राकृतस्य स्थितिः स्वीकृता । शौरसेनीप्राकृतस्य परवर्ति रूपमेव महाराष्ट्रीप्राकृतमिति केचन विद्वांसः । केचित् तु हेमचन्द्रादिभिर्विवेचितं प्राकृतमेव महाराष्ट्रीप्राकृतमित्यामनन्ति ।

नान्यस्याः कस्याश्चित् प्राकृतभाषायाः काव्येषु नाटकेषु वा तथा प्रभूतः प्रयोगः, न चान्यस्याः कस्याश्चिदपि प्राकृतभाषायाः शब्देषु तथा भूयिष्ठं परिवर्तनं जातं यथा महाराष्ट्रीप्राकृतस्य । तत्र संस्कृतभाषाया भूरीणि व्यञ्जनानि बहिष्कृतानि, गीतेषु श्रुतिमधुराया अस्याः प्रयोगाधिक्यात् । हालकृत-सत्तसई-जयवल्लभकृत-वज्जालग्गे'ति च काव्यद्वयं महाराष्ट्रीप्राकृतस्य श्रेष्ठं रत्नम् । 'सेतुबंध' 'गउडवहो' इति महाकाव्य-

द्वयमपि महाराष्ट्रीप्राकृतभाषयैव संदब्धम्। डा० हरमानयाकोबीमहोदयेन भाषेयं जैन-महाराष्ट्रीत्वेन कीर्तिता।

ध्वनिपरिवर्तनदशा सा महिष्ठा। 'चित्तं ण लिहइ चित्तं' (१२० पृ०) इति महार्थमञ्जर्यां चित्रं>चित्तमित्यालेख्यान्तःकरणचैतन्यरूपमर्थत्रयं चित्तशब्देनोच्यते। एवमेव 'अत्थं एत्ताण सोमसुज्जणं' इत्यत्रास्त्रमास्थामर्थमस्तमिति व्याख्यानुगुण्याद् अत्थं इत्यनेनानेकार्थोऽभिधीयते। पाअड (७१ गाथायाम्) इत्यनेनानुरणनशक्त्या प्रकटशब्दपर्यायेण सूत्राणां सूचनप्राधान्येऽपि नात्यन्तमव्यक्तार्थतेत्यभिव्यज्यते।

द्वादश्यां त्रयोदश्यां चतुर्दश्यां च खीस्तशताब्दयां महाराष्ट्रीप्राकृतस्य गीतेषु गाथा-रूपेषु सूत्रेषु वा सर्वत्र प्राज्यतमः प्रयोगः। संस्कृतभाषाव्याकरणेष्वपि प्राकृतस्य प्रभावो दृश्यते। हेमचन्द्रेण स्वकीये संस्कृतव्याकरणेऽन्तिमोऽध्यायः प्राकृतभाषाविषयकोऽपि निबद्धः। वङ्गदेशप्रचलिते संस्कृतभाषामये संक्षिप्तसारव्याकरणेऽपि तथैव कृतम्। [ प्राकृतभाषा 'बालानामपि सद्बोधकारिणी कर्णपेशला (१·५२) इति प्रत्यपादि सिद्धर्षिणा। ] स्वकीयस्य ग्रन्थस्य लोकप्रचारकामनया श्रीमहेश्वरानन्देनापि महार्थमञ्जर्या गाथाः प्राकृतभाषाया-मेव रचिताः। स्वोपज्ञटीका संस्कृतभाषायामेवोपनिबद्धा। देशीनाममालायामपीयमेव पद्या। मूलग्रन्थः प्राकृतभाषायाम्, टीका संस्कृतभाषामयी। ग्रन्थकारेणास्य कारणं (७१ गाथाव्याख्याने) प्रकटितम्। षोडशशताब्दीकेन तुलसीदासेनापि स्वकीयग्रन्थस्य लोक-प्रचारकामनया संस्कृतं तिरस्कृत्य लोकभाषायामेव रचितं 'रामचरितम्' अविगणय्य पण्डितजनानां विरोधम्।

## महार्थमञ्जर्याः प्राकृतभाषा

प्राकृतभाषायां षोडशब्दस्थाने 'सोलस' इति 'सोलह' इति च प्रयोगद्वयम् (द्र० भवि०, अणु० १५२, भग ३५, १)। अस्मिन् ग्रन्थे तु षोडशार्थकः 'छोलह' इति शब्दः प्रयुक्तः (द्र० ४० गाथा, १०१ पृ०; ७० गाथा)। पश्येत्यर्थकः 'उवह' इत्यव्ययशब्दो देशी। पिच्छार्थकः 'अवेहुण' (६० गाथा, १५४ पृ०) इति शब्दः प्राकृतभाषाया-मप्राप्तः। तस्य संस्कृतच्छायायां 'पिञ्ज' इति दृश्यते। वस्तुतः प्राकृतभाषायां 'पिच्छ' इति 'पिंछ' इति च शब्दद्वयमात्रम्। संस्कृतभाषायां द्वितीयः शब्दो नास्त्येवेति 'पिञ्ज' इति च्छायाशब्दस्थाने पिच्छशब्देन भाव्यम्। युद्धार्थको जुत्थ (७० गाथा) इति शब्दो नास्ति प्राकृते। तत्र तु जुज्झशब्दो दृश्यते। एवमेव नमस्कारार्थे 'जोक्कार' (४ गाथा) इति शब्दश्चिन्तनीयः।

सुहेल्ली (६५ गाथा) इत्यस्य संस्कृतच्छायास्ति—सुखाशय इति। वस्तुतो नायमतिशयार्थकः शब्दः। यद्यप्येष देशीनाममालायां देशीत्युद्घोषितः, तथाप्येतस्य मूलं सुखकेलिशब्दे शक्यते द्रष्टुम्।

'सत्तदह फालणेत्ते' इति सप्तत्रिंशगाथायां 'फाल' इत्यस्य स्थाने 'भाल' इत्यनेन भवितव्यम्, संस्कृतप्राकृतादिभाषासु क्वापि फालशब्दस्य ललाटार्थे प्रयोगाभावात् ( द्र० ८३ पृ० )। महेश्वरानन्देन ( ८७ पृष्ठे ) स्वयमेव व्याख्यायां फालशब्दस्यार्थो व्यधायि-- 'ललाटम्' इति ।

'तिन्तिणि' ( ६२ गा०, १४८, १५८ पृ० ) इति शब्दः संस्कृतभाषायां नास्ति । तत्र तु 'तिन्तिडी' इति लभ्यते । किमयं द्रविडमूलः प्राकृतो वेति निर्णीयताम् । 'पाइअ-सद्दमहण्णवो' इति प्राकृतमहार्णवे प्राकृतभाषायाः 'तिन्तिणी' इति शब्दस्य मूलं 'तिन्त्रिणी' इति लिखितम्, तन्न सध्रीचीनम्, संस्कृतभाषायां तादृशस्य शब्दस्यानुपलम्भात् । तिन्तिडी-शब्दोऽपि तत्र पृषोदरादित्वात् सिद्ध्यति । वस्तुतो द्रविडमूलोऽयं शब्दोऽवधेयः ।

## ग्रन्थकर्तुर्व्याकरणज्ञानम्

ग्रन्थकर्त्रा स्वयमेव ग्रन्थान्ते ( १६५ पृ० ) 'साहित्याब्धौ कर्णधारोऽहमासं काव्यालोकं लोचनं चानुशील्य' इति स्वीकृता साहित्यशास्त्रार्णवपारेगामिता । प्रस्तुतस्य ग्रन्थस्य पर्यालोडनेन तदीयं व्याकरणशास्त्रज्ञानमपि नोनं ततः । 'विद्येति जातावेकवचनम्' ( द्र० ६८ गाथा, १७१ पृ० ) "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च, इति महाभाष्यमर्यादया" ( ५१० )। 'अतिसर्गे लोट्' ( ६ गाथा २० पृ० )। 'भवत्विति संप्रश्ने लोट्' ( ५७ गाथा, १४३ पृ० )। 'ज्ञातव्य इति ज्ञानार्हः शक्यज्ञानो वाऽवश्यं ज्ञेय इति वा प्रैषातिसर्गादिर्वा विनेयजनाभिमुखीकाराय बहुप्रकारः कृत्यप्रत्ययार्थोऽनुसन्धेयः' ( १४७ पृ० )। 'प्रतिबिम्बतु—इत्यादौ कामचारकरणात्मन्यामन्त्रणे लोट्' ( १४७ पृ० )। 'वर्धताम् इति लोट्प्रत्ययायुक्त्या' ( २ गा०, १३ पृ० )। 'यत्रेति विभक्तिप्रतिरूपको निपातः' ( १६ गाथा, ४३ पृ० ) इत्यादीनि निदर्शनानि ।

'प्रियतद्धिता दाक्षिणात्याः' इति महाभाष्यकारोक्तिं चरितार्थयन् ग्रन्थकारस्तद्धित-प्रयोगेषु बद्धादरो दृश्यते । अन्यत्र विरलप्रयुक्तानि कानिचन निदर्शनानीह प्रस्तूयन्ते-- वैश्वात्म्यम् ( १२, ४९, १२२ पृ० )। स्तैमित्यम् ( ४१, ७४ पृ० )। औल्बण्यम् ( ५३, १४१ पृ० ) औद्बण्यादि (७१ पृ०)। चाकित्य-( २४, १२२, १५६, १६५ पृ० )। नैश्चिन्त्य ( १२८, १५४, १६१, १६३ पृ० )। पारिमित्येन ( १२९ पृ० )। अवैयाकुल्यम् ( १६० पृ० ), अशौचित्येन ( २३ पृ० ) इति ।

## व्युत्पत्तिप्रकारः

शब्दानामर्थप्रकाशसमये ग्रन्थकर्त्रा स्पष्टप्रतिपत्तये व्युत्पत्तिसरणिरवलम्बिता । तत्र व्याकरणाधारेण प्रदर्शिताभिस्ताभिर्व्युत्पत्तिभिः सह नैरुक्तप्रक्रियाऽपि दर्शिता । संप्रदायानु-

गुण्यात् तन्निरुक्तिरूह्या ( ८५ पृ० ) इति स्वीकृतं महेश्वरानन्देन । इह प्रस्तूयन्ते ग्रन्थोक्ताः काश्चन व्युत्पत्तयः—

**गुरुः ( ४ पृ० )**

गृणाति = प्रकाशयति विश्वव्यवहारम् इति निरुक्त्या सर्वानुग्राहकः । तादृक्प्रकाशक-व्यतिरेके विश्वस्यान्धबधिरतादिप्रायतापत्तेः । स च पर्यन्ततः परमशिवभट्टारकापरपर्यायः स्वात्मरूपो महान् प्रमाता । यदुक्तं श्रीशिवसूत्रेषु—'गुरुरुपायः' इति

**चरणौ ( ४ पृ० )**

'ज्ञानक्रियालक्षणं स्वातन्त्र्यं चर्यते = गम्यते, प्राप्यते, बुध्यते, भक्ष्यते चाभ्यां विश्वमिति हि चरणावुच्येते ।'. इह ग्रन्थकर्त्रा कुब्जिकामतमवलम्ब्य विहिता निरुक्तिः ।

**पुरुषः ( ५४ पृ० )**

यदनयोः पुरे वसतीति पुरुषः, पुरमोषति दहतीति पुरुष इति स्वभावभेदः ।

बुद्धिप्राणशरीराख्ये यदेतस्मिन् पुरत्रये ।
अहङ्काराद् वसत्यात्मा तेनायं पुरुषः स्मृतः ॥
एतत् पुरत्रयं दग्धं येन स त्रिपुरान्तकः ।
स एव पुरुषः प्रोक्तः स्मराररिपि स स्मृतः ॥

**आलोकः ( ६२ पृ० )**

आसमन्तात्लोकनं साकल्यतः स्वान्तश्चर्वणचातुर्यम् । स विशृङ्खलो भवति बहिर्भावस्वभावनियन्त्रणातिक्रान्तो भवति ।

**वीर्यम् ( ६८ पृ० )**

वीरसंबन्धी धर्मो हि वीर्यमुच्यते । तत्र वीरो नाम विविधमीरयति विश्ववैचित्र्यमिति भगवान् शब्दराशिभट्टारक उच्यते ।

**गणपतिः ( ८५ पृ० )**

गण्यते = संख्यायते इति गणः षडध्वा भोगरूपोल्लासः, तं पाति = रक्षतीति गणपतिः—इत्यादिप्रक्रियया ऽत्यन्तसुखसाध्योऽयं निरुक्तिप्रकारः ।

**खेचरी ( ८६ पृ० )**

खे = बोधरूपे प्रमातरि चरणात् खेचरी ।

**दिक्चरी ( ८६ पृ० )**

दिक्ष्वन्तःकरणेषु चरतीति दिक्चरी ।

**गोचरी ( ८६ पृ० )**

गोषु = बहिरिन्द्रियेषु संचरणाद् गोचरी ।

### भूचरी ( ८६ पृ० )

भुवि = विषयभूमौ चरणाद् भूचरी ।

### मूर्तिः ( ८७ पृ० )

मूर्च्छनान्मोहरूपात् समुच्छ्रयणरूपाद् वा मूर्तित्वम् ।

### पुष्पम् ( ११४ पृ० )

स्वभावं पोषयन्तीति व्युत्पत्त्या पुष्पाणीति तात्पर्यार्थः ।

### मन्त्राः ( १२२ पृ० )

'मननत्राणधर्माणो मन्त्राः' इति ह्याम्नायः ।

### जपः ( १२२ पृ० )

'जननपालनस्वभावतया हि जपः' इत्युच्यते ।

### मुद्रा ( १२६ पृ० )

मुदं रातीति व्युत्पत्त्या ।

### होमः ( १२७ पृ० )

'हूयते मनसा सार्धं स होमश्चेतनास्रुचा ।'

### निष्कलम् ( १२९ पृ० )

निष्कलम् इत्यत्र कलाशब्दः—कलयति पारिमित्येन बहिः परिच्छिनत्तीति व्युत्पत्त्या माया शक्तिर्वा ।

### कुम्भः ( १४४ पृ० )

कुम्भयति = अव्याकुलमवस्थापयतीति व्युत्पत्त्या प्रतिष्ठाहेतुराधारविशेषः ।

### देशना ( १६९ पृ० )

अत्र देशो देशना = स्वात्मप्रत्यभिज्ञापनारूपरहस्यार्थोपदेशनात्मा स्वभावोऽस्यास्तीति व्युत्पत्त्या गुरुनाथशरीरानुप्रविष्टः परमेश्वर एव कारुण्यादवच्छिन्नप्रमातृरूपं शिष्यमुत्तारयतीत्युद्भाव्यते । यदुक्तमागमे—

'कुलाचार्यमधिष्ठाय देवो दीक्षयिता शिवः' इति ।

### भैरवः ( १७२-१७३ पृ० )

१. भीरवः = संसारचकिताः प्राणिनः, तेषामयमभयप्रदायितया संबन्धीति वा ।

२. भीः = संसारचाकित्यं तन्निबन्धनो रवः = प्राणिनामाक्रन्दस्तस्य प्रवर्तक इति वा ।

३. भियं पशुसंबन्धिनीमुद्दिश्य रवणं यच्छब्दनं तत्स्वभावानां माहेश्वर्यादीनां वर्गाधिष्ठात्रीणां स्वामीति वा ।

४. लोकसंबन्धिनीं भियं रौति = शातव्यतया परामृशतीति भीरुर्मृत्युकालादिरवच्छिन्नो भयङ्करवर्गस्तस्यापि भयङ्कर इति वा ।

५. भानि = नक्षत्रोपलक्षितानि चन्द्रसूर्यादीनि ज्योतींषि तानीरयति = प्रेरयति भेरः = कालः, तं वाययन्ति = शोषयन्ति—इति भेरवाः = कालग्रासरसिकाः = महाकालयोगिनस्तेषामधिष्ठातेति वा ।

६. विश्वं प्रति भरणरमणवसनानां प्रयोजयितेति वा भैरव इत्युच्यते । यदुक्तं क्षेमराजेन—

भीरूणामभयप्रदो भवभयाक्रन्दस्य हेतुस्ततो
हृद्धाम्नि प्रथितश्च भीरवरुचामीशोऽन्तकस्यान्तकः ।
भेरं वायति यः सुयोगिनिवहस्तस्य प्रभुर्भैरवः
विश्वस्मिन् भरणादिकृद् विजयते विज्ञानरूपः शिवः ।। इति ।

**देवः ( १७३ पृ० )**

दीव्यतेः क्रीडाविजिगीषाद्यनेकार्थाभिधानसामर्थ्यात् । तत्र—

(क) हेयोपादेयतादिविकल्पवैमुख्येन स्वसंविदेकघनतयोच्चलनम् = **क्रीडा** ।

(ख) सर्वोत्कर्षेण वर्तितुमौन्मुख्यं **विजिगीषा** ।

(ग) निर्विकल्पेऽप्यात्मनि विकल्पप्रथापरामर्शो **व्यवहारः** ।

(घ) अवभास्याशेषप्रपञ्चावभासनाविनाभूता स्वयंप्रकाशता **द्युतिः** ।

(ङ) स्वरूपलाभमारभ्य सर्वाम्नायप्रवृत्तिपर्यवसानास्पदत्वं स्तुतिः ।

(च) सृष्ट्यादिषु कृत्येष्विच्छाक्रियात्मकशक्तित्रयाङ्गीकारो गतिः ।

तदुक्तं मयैव—

नैश्चिन्त्योत्कटमुच्चलन्नभिलषन् सर्वोत्तरं वर्तितुम्
स्वस्मिन् भेदमभेदितेऽपि विमृशन् स्वात्माविशेषं स्फुरन् ।
अर्थानामुदयव्ययप्रकृतिभूरुच्छ्रायवान् इच्छया
देवो दृक्क्रिययोः प्रदीप्तमहिमा भावेषु वो दीव्यतु ।। इति ।

तत्संप्रदायानुगुण्यात् तन्निरुक्तिरूहनीयेति व्युत्पत्तिप्रकारेऽस्मिन् महेश्वरानन्दाभिमतम् । इदमेवावधार्य नेह कृतं गुणदोषविवेचनं मया ।

## भाषासौन्दर्यच्छटा

दर्शनविषयकाणां ग्रन्थानां भाषा प्रायशो न भवति ललितललिता। प्रकृतग्रन्थस्य भाषा तु समासबहुलाऽपि लालित्येन मनोहारिणी। ग्राह्याणि कानिचिन्निदर्शनानि--

'महतीमनौचित्यकक्ष्याम् अवतरतीति प्रागुक्तम्' (१६ पृ०)। महदनुचितमित्यर्थो वाक्यस्यास्य। 'इत्यलं तन्त्रान्तरपान्थघण्टापथप्रस्थानेन' (१६ पृ०) इह तु संक्षेपेणैव बोधितमिति निष्कृष्टोऽर्थः। समासमन्तरा ललितवाक्यमिदम्--'बन्ध एव नास्ति, कुतो मोक्षः, कुतस्तरां तदिच्छा' (२१ पृ०)। अन्यानि वाक्यानि चेत्थम्--'इत्यवटाटङ्कसंकेतौचित्यमुपपाद्यते' (७४ पृ०)। 'इत्यादिव्याहतिदोषोद्भावनम् अस्मत्संचारसरणीसीमसु न किञ्चिदपि कण्टकाङ्कुरमुन्मीलयितुमुत्युङ्क्त इति' (७६ पृ०)। 'इत्यलमितरजनसुलभपदकपल्लवाखण्डनपाण्डित्यप्रदर्शनेन (७४ पृ०)। 'इत्यलं चर्वितचर्वणोपलालनचापलेन' (१३० पृ०)। 'संकोचकलङ्कोपलेपः' (१५५ पृ०) इत्यादि।

इत्थं प्रतिपृष्ठं पदे पदे वाक्यगुम्फा हृदयावर्जका विषयस्योपस्थापने सरलतया समर्थास्तदानीन्तनीं वाक्शैलीं प्रकटयन्ति। कस्याश्चिदपि भाषाया भिन्नभिन्ना भवति वाक्शैली। विभक्त्यादियोजनमात्रेण भवेन्नाम वेषान्तरम्, न तु हृदयान्तरमित्यद्यतनैः संस्कृतलेखकैरभ्युपेयम्। स्वकीयग्रन्थस्य भाषासंबन्धे ग्रन्थकर्तुरभिमतमिदम् (१९० पृ०)--

किञ्च भाषा तदीयैव माधुर्यामृतवर्षिणी।
औचित्यं पोषयत्यत्र महामन्त्रानुसारिणी॥ इति।

व्याकरणनिकाये वैयाकरणसिद्धान्तकौमुद्याः संक्षिप्तसंस्करणरूपा लघुसिद्धान्तकौमुदीव तन्त्रनिकाये महार्थमञ्जर्याः संक्षिप्तं संस्करणमपि व्यनक्ति तस्याः प्रचुरप्रचारम्। चोलाभिजनमहेश्वरानन्दकृतस्य ग्रन्थस्यैतस्य समुपलभ्यमानाश्चतस्रो मातृका मलयालमलिपिबद्धाः। यद्यपि लिप्यनभिज्ञानवशात् संपादकेन नैतासामुपयोगः कर्तुमपारि, तथापि म० म० कविराजमहोदयैरधीतस्य, कैश्चिद् विपश्चित्प्रवरैः संशोधितस्य च गोयनकापुस्तकालयस्थस्य ग्रन्थस्य साहाय्येन प्रकृतोऽयं ग्रन्थः संपादितः। इतः पूर्वमेव प्रथमतः १९१९ ई० वर्षे त्रिवेन्द्रमसंस्कृतग्रन्थमालायां प्रकाशितचरोऽपि संप्रति सुदुर्लभः। महार्थमञ्जर्या लघुसंस्करणं काश्मीरग्रन्थमालायां प्रकाशितमधुनापि सुलभम्। संस्करणस्यास्य मातृका आधिक्यतो लभ्यन्ते।

## प्रकृतं संस्करणम्

इह ग्रन्थादौ ग्रन्थ-ग्रन्थकृत्-क्रमदर्शनादिविषयानवलम्ब्य ग्रन्थान्ते महार्थमञ्जरीमूलगाथानाम् अक्षरानुक्रमणिका, महार्थमञ्जरीपरिमले स्मृतानां ग्रन्थानां ग्रन्थकर्तॄणां च सूची, ग्रन्थकारीयस्वोपज्ञश्लोकार्धानुक्रमणी, महार्थमञ्जरीपरिमलोद्धृतवचनानां तन्मूलग्रन्थ-

संकेतनिर्देशपूर्वकं श्लोकार्धानुक्रमणी, परिमलोद्धृतानां वादानां वादिनां च सूची, तत्रागतानां विशिष्टानां शब्दानां च सूचीत्यादीनि परिशिष्टानि संयोजितानि महामहोपाध्यायकविराज-महोदयानां सान्निध्यतः समधिगततन्त्रशिक्षेण संपादनकलाकृतमुखेन योगतन्त्रविभागाध्यक्षेण श्रीमता व्रजवल्लभद्विवेदमहाभागेन। एवं तावत् परिशिष्टादिषूपयोगिन्याः सामग्र्याः क्रोडीकरणात् प्रकृतं संस्करणम् अनुसन्धानादिकर्म चिकीर्षतां जिज्ञासूनां कोविदानां च महते लाभाय भविष्यतीति दृढं प्रत्येति।

कालभैरवाष्टम्याम्
२०२८ वैक्रमाब्दे

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
संचालकः
अनुसन्धानसंस्थानस्य

# उपोद्घातः

वाराणसेयसंस्कृतविश्वविद्यालये योगतन्त्रविभागस्थापनानुकालं १९६४–६५ ई० वर्षतः प्रवृत्तमनुसन्धानप्रकाशनादिकार्यम् । स्वनामधन्यानामागमाब्धिपारदृश्वनां प्रातःस्मरणीयानां श्रद्धेयचरणानां श्रीमतां म० म० पण्डितगोपीनाथकविराजमहोदयानामाध्यक्ष्ये प्रवृत्तेन योगतन्त्रविभागेन कार्यक्रमः कोऽपि सुविचारितः प्राचाल्यत तदर्थम् । षट्खण्डात्मक आसीत् स कार्यक्रमः । तदित्थम्—

( १ ) लुप्तप्रायाणामप्रकाशितानामथ च दुर्लभानां योगतन्त्रग्रन्थानां प्रकाशनम् । अत्र वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनाख्यः पुस्तकालयः प्रधानमवलम्बनम् । तत्र संगृहीताभिस्तन्त्रागमवाङ्मयस्य मातृकाभिः पाठसंशोधनादिपुरस्सरं सज्जीक्रियन्ते ग्रन्था मुद्रणाय, प्रकाश्यन्ते च ते तन्त्रसंग्रहनाम्ना । अधुनावधि तन्त्रसंग्रहस्य प्रत्येकं षड्ग्रन्थात्मकं भागद्वयं मुद्रितं प्रकाशितं च, यत्र हि प्रथमे भागे सटीका विरूपाक्षपञ्चाशिका, क्षेमराजव्याख्योपेता साम्बपञ्चाशिका, नित्यानन्दविरचितव्याख्योपेतं त्रिपुरामहिम्नस्तोत्रम्, उत्पलवैष्णवविरचिता स्पन्दप्रदीपिका, अनुभवसूत्रम्, वातुलशुद्धाख्यतन्त्रं च प्रकाशितानि, द्वितीये च भागे समावेशितानि निर्वाण-तोडल-कामधेनु-फेत्कारिणी-ज्ञानसंकलिनीतन्त्राणि पूर्वं वंगलिपिमुद्रितानि, कन्नडलिपिमुद्रितो देवीकालोत्तरागमश्च निरञ्जनसिद्धविरचितया वृत्त्या ग्रन्थलिप्यां मुद्रितपूर्वया समलङ्कृतः । ख्यातिमाप च नित्याषोडशिकार्णवनामा ग्रन्थः शिवानन्दविरचितया ऋजुविमर्शिन्या विद्यानन्दविरचितयाऽर्थरत्नावल्या च व्याख्यया समलङ्कृत उत्तरप्रदेशीयेन प्रशासनेन साम्प्रतमेव कालिदासपुरस्कारेण संमानितः । अत्र च परिशिष्टे दीपकनाथविरचितं त्रिपुरसुन्दरीदण्डकम्, शिवानन्दमुनिविरचितानि सुभगोदय-सुभगोदयवासना-सौभाग्यहृदयस्तोत्राणि अमृतानन्दयोगिविरचितौ सौभाग्यसुधोदयचिद्विलासस्तवौ च समावेशितानि ।

( २ ) ऐतिहासिक्या आध्यात्मिक्या च दृष्ट्या योगतन्त्रविषयाणां समालोचनम् । एतदर्थं प्रवृत्ता योगतन्त्रविमर्शिनीनाम्नी विभागस्यास्यानुसन्धानपत्रिकाऽनियतकालिकी । अस्याः प्रथमोऽङ्कः साम्प्रतं प्रकाशितः, यत्र हि एकादश निबन्धाः सन्निवेशिताः । १९६५ ई० वर्षे वाराणसेयसंस्कृतविश्वविद्यालये सम्पन्ने तन्त्रसम्मेलने विभिन्नासु गोष्ठीषु पठितेषु निबन्धेषु कतिपये संस्कृतभाषामया निबन्धाः प्राकाश्यन्त सारस्वत्यां सुषमायाम् । बहवोऽवशिष्टाः संस्कृतभाषामया हिन्दीभाषामयाश्च निबन्धा अद्याप्यप्रकाशिता अवशिष्यन्ते । तन्त्रसम्मेलनावसरेऽत्रैव समायोजितायां तन्त्रप्रदर्शिन्यां भूयांसि विशिष्टानि दर्शनार्हाणि वस्तूनि तान्त्रिकसंस्कृतिसम्बद्धानि चित्राणि च प्रदर्शितानि । तेषामपि परिचय ऐतिहासिक्या

सांस्कृतिक्या च दृष्ट्या तन्त्रशास्त्रानुशीलनरुचीनां विदुषां परमोपकारकर इति कृत्वा योगतन्त्रविमर्शिन्या विशेषाङ्कः प्रकाशयिषितः सत्यार्थिके सौविध्ये ।

( ३ ) समुपलभ्यन्ते भूयांसि वचांसि ग्रन्थग्रन्थकारनामोल्लेखपुरस्सरमुद्धृतानि तन्त्रागममूलग्रन्थेषु टीकाग्रन्थेषु च, येषां मूलग्रन्था न दृश्यन्ते केषुचिदपि पुस्तकालयेषु । एतादृशानां वचनानां संग्रहः क्रियते लुप्तागमसंग्रहनाम्ना । अस्य प्रथमो भागः प्रकाशितः, यत्र प्रायः २२१ संख्यापरिमितानां ग्रन्थानां ग्रन्थकाराणां च वचनानि संकलितानि । सज्जीक्रियते द्वितीयो भागो मुद्रणाय । अचिरादेव प्रकाशयिष्यते सोऽपि, यत्रोभयोरपि भागयोः सन्निवेशिता ग्रन्था ग्रन्थकाराश्च तान्त्रिकवाङ्मयस्यावान्तरविभागवर्गीकरणमुखेन ऐतिहासिक्या दार्शनिक्या च दृष्ट्या पर्यालोचयिष्यन्ते ।

( ४ ) तान्त्रिकं दर्शनं वर्तते साम्प्रतं विरलप्रचारम् । अस्यापि वर्तते स्वकीया पारिभाषिकी शब्दावली । अपरिज्ञाय तदर्थं प्रवेशो दुर्लभस्तत्रेति तान्त्रिकदर्शनदुर्गमकान्तारे निर्भयं प्रवेशाय जिज्ञासूनां तान्त्रिकग्रन्थानां विशेषतष्टीकाग्रन्थानां साहाय्येन संगृह्यते पारिभाषिकशब्दानामर्थस्तन्त्रकोशनाम्ना च प्रकाशयिषितः संग्रहोऽयम् । अस्यापि प्रथमो भागोऽचिरादेव प्रकाशितः स्यादित्याशास्यते ।

( ५ ) तान्त्रिके वाङ्मये समुपलभ्यन्ते सकामानां प्रयोगाणां निरूपको भागस्तत्र तत्र प्रासङ्गिकेन रूपेण प्रामुख्येन वा प्रदर्शितः । यद्यपि नास्ति तेषामाध्यात्मिक उपयोगस्तद्दृष्ट्या हेयाश्च ते समुद्घोष्यन्ते, तथापि वर्तते लोककल्याणाय तेषामुपयोग इति प्रयोगप्रतिपादकानामीदृशानामंशानां संग्रहोऽपि कर्तव्यताकोटिमाटीकतेऽस्य विभागस्य ।

( ६ ) विभिन्नासु तान्त्रिकीषूपासनापद्धतिषु विभिन्नानां देवतानां देवीनां च ध्यानोपासनारहस्यसूचका अंशा यथायथं समुपलभ्यन्ते । अत्र ध्यानमुखेन तासां तासां देवतानां सकलं स्वरूपमुन्मील्यते । आधुनिकमूर्तिविद्यायां नूतनदृगुन्मेषाय वर्तते कोऽपि तस्यांशस्योपयोग इति तदर्थमपि प्रयत्यते विभागेनानेन ।

समेषामेषां कार्यकलापानां विशेषतो दुर्लभानामप्रकाशितानामथ च लिप्यन्तरेषु मुद्रितानाम्, मुद्रितपूर्वाणामपि साम्प्रतं सुदुर्लभानां च तन्त्रशास्त्रग्रन्थानां प्रकाशनाय प्रक्रान्ता नाम योगतन्त्रग्रन्थमाला । अस्याः पञ्चमपुष्परूपेण महार्थमञ्जर्याः परिमलोपेताया महेश्वरानन्दकृतेः १९१९ ई० वर्षे त्रिवेन्द्रंसंस्कृतग्रन्थमालायां प्रकाशितपूर्वाया अपि साम्प्रतं सुदुर्लभाया अभिनवं परिष्कृतमिदं संस्करणं तन्त्रशास्त्ररसिकानां विदुषां समक्षमुपस्थापितवतामस्माकं मोमुद्यते चेतः ।

## किं नाम योगतन्त्रम् ?

योगतन्त्रविभागः, योगतन्त्रग्रन्थमाला, योगतन्त्रविमर्शिनीत्यादिषु प्रयुक्तो योगतन्त्रशब्दः काञ्चन व्याख्यामपेक्षते । साम्प्रतं शिक्षणसंस्थासु पाठ्यक्रमे सन्निवेशितं योगशास्त्रं केवलं पातञ्जलयोगस्यैव बोधकम् । एतदतिरिक्तं विभिन्ना यौगिकाः सम्प्रदायाः प्रवृत्ता

आसन् भारते वर्षे । साम्प्रतमपि च केचनानुवृत्ताः, अपरे च हन्त नामशेषतां गताः। मोहेंजोदड़ो-हड़प्पास्थानयोः समुपलब्धेषु सिन्धुसभ्यतावशेषेषु भारते प्राचीनतमे काले वर्तमानाया विशिष्टाया यौगिकपद्धतेश्चिह्नानि समवलोक्यन्ते । श्वेतादिलकुलीशान्तानामष्टाविंशतिसंख्याकानां योगाचार्याणां प्रत्येकं चत्वारः शिष्या इति कृत्वा द्वादशोत्तरशतं पाशुपता योगिनो पुराणेषु गीयन्ते । त्रिपिटकान्तर्गते पालिवाङ्मये विशेषतः परवर्तिषु विशुद्धमार्ग-अभिधर्मार्थसंग्रहप्रभृतिपालिग्रन्थेषु यौगिकानि विशिष्टानि रहस्यानि वर्ण्यन्ते। दृश्यते तान्त्रिकः षडङ्गो योगः शैवेषु वैष्णवेषु बौद्धेषु च तन्त्रेषु समानतन्त्रत्वेन व्याख्यातः । वर्तते मत्स्येन्द्रनाथावतारितः कौलिको योगविधिः पिण्ड-पद-रूप-रूपातीतपदैर्जैनयोगाचार्यैरपि समं व्याख्यातः, कुण्डलिनीयोगश्च बौद्धवज्रयानविद्वद्भिरपि शून्यवादविज्ञानवादमुखेनोपन्यस्तः। प्रचलिता च विद्यते नेतिधौतिप्रभृतिषट्कर्मप्रतिपादनपरा गोरक्षप्रभृतीनां नाथयोगिनां विशिष्टा योगपद्धतिः। एतासामेव यौगिकदृष्टीनां शाखाप्रशाखा भारते वर्षे विभिन्नेषु स्थानेषु सहज-अवधूत-बाउल-पञ्चसखि-सन्त-सिक्ख-दरवेशप्रभृतिनामभिः प्रचलिता विद्यन्ते । सर्वास्ता दृष्टीः क्रोडीकृत्य प्रवर्ततेऽत्रत्यो योगशब्दः ।

आगमशास्त्रमिति तन्त्रशास्त्रमिति वा नाम्ना प्रथितं वर्तते भारतीयं विशालं वाङ्मयम्, साम्प्रतमपि प्रायो विद्वद्गोष्ठीषु नातिसत्कृतम्। रहस्याम्नायपदेन प्रख्यापितं तत्। शैवानां वैष्णवानां च तदीयं वाङ्मयमागमपदेन, शाक्तानां बौद्धानां जैनानां च तन्त्रपदेन प्रायोऽभिधीयते । तिष्ठत्स्वपि साधकवर्येषु तत्र तत्र साधनानिरतेषु लुप्तप्रायमेवासीदेतच्छास्त्रं पठनपाठनविधिषु सर्वथा बहिष्कृतम्। विस्मृतप्राया एवासन्नत्रत्या विशिष्टा ग्रन्था अपि । कश्मीरमहाराजश्रीप्रतापसिंहदेवप्रतिष्ठापितया काश्मीरग्रन्थमालया, दक्षिणभारतीयसंस्थाभिर्नैकाभिः, पाण्डिचेरीस्थफ्रेंचशोधसंस्थानेन, तिरुपतिस्थवेङ्कटेश्वरशोधसंस्थानेन, बड़ोदानगरस्थगायकवाडशोधसंस्थानेन, कलिकातास्थितयाऽऽगमानुसन्धानसमित्या च काश्मीरशैवागमस्य, सिद्धान्तवीरशैवागमयोः, पाञ्चरात्रवैखानसवैष्णवागमयोः, बौद्धानां शाक्तानां च तन्त्राणां विशिष्टा ग्रन्थाः प्राकाश्यन्त। कलिकाता-उच्चन्यायालयस्य विचारपतिना मनीषिणा सरजानवुडरफमहानुभावेन शिवचन्द्रविद्यार्णवस्य शिष्येण 'आर्थर एवेलन' इति कल्पितेन नाम्ना विशिष्टान् तन्त्रग्रन्थान् प्रकाश्य आङ्गलभाषया व्याख्याय च पुनः प्रतिष्ठामापादितमेतच्छास्त्रम्। डा० विनयतोषभट्टाचार्य—डा० प्रबोधचन्द्रबागची—डा० कान्तिचन्द्रपाण्डेय—डा० चिन्ताहरणचक्रवर्ति—डा० गोविन्दगोपालमुखोपाध्याय—डा० उपेन्द्रनाथदासप्रभृतयो भारतीयाः, प्राध्यापकसिलवांलेबी—डा० ओटोश्राडर—प्रा० बर्नेट-टुची—ग्लोनी—गुन्थर-प्रभृतयो वैदेशिकाश्च विद्वांसः प्रायतन् प्रवृत्ताश्च सन्ति शास्त्रस्यास्य गौरववर्धनाय। तदेतच्छाखाप्रशाखासहितं विशालं वाङ्मयं तन्त्रपदाभिधेयम् ।

एवं च योगतन्त्रपदेनानेन योगशास्त्रस्य तन्त्रशास्त्रस्य च सर्वाः शाखाप्रशाखास्तदीयं विशालं वाङ्मयं प्रकाशितमप्रकाशितं विस्मृतं लुप्तं च बोध्यते। उपर्युल्लिखितानां

संस्थानां विदुषां च प्रयत्नेन तदेतस्य शास्त्रस्य कियानेवांशः प्राकाश्यत। नेपाल–कश्मीर–दक्षिणभारतादिषु स्थितं विशालं तान्त्रिकं वाङ्मयमधुनापि प्रकाशनानुशीलनसापेक्षमिति कृत्वा तदेतस्य पुण्यकर्मणः साधनायोत्तरप्रदेशस्य भूतपूर्वराज्यपालमहोदयेन महामहिम-श्रीविश्वनाथदासमहानुभावेन संस्कृतविश्वविद्यालयस्य कुलपतिना, उपकुलपतिना च भूत-पूर्वेण श्रीमता सुरतिनारायणमणित्रिपाठिमहाभागेन विश्वविद्यालयानुदानायोगस्यार्थिकेन साहाय्येन तन्त्रशास्त्रोद्धारैकजीवनव्रतानां म० म० पण्डितगोपीनाथकविराजमहोदयाना-माध्यक्ष्ये प्रवर्तित एष योगतन्त्रविभागोऽधुनावधि किमकरोदिति पूर्वमेवावर्णयाम।

## परिमलोपेता महार्थमञ्जरी

स्वोपज्ञपरिमलाख्यव्याख्योपेताया महार्थमञ्जर्या महेश्वरानन्दकृतेः साम्प्रतं दृश्यते संस्करणद्वयम्। एकं विस्तृतं त्रिवेन्द्रंसंस्कृतग्रन्थमालायां प्रकाशितम्, अपरं च संक्षिप्तं काश्मीरग्रन्थमालायां कृतपदम्। बाहुल्येन समुपलभ्यन्ते संक्षिप्तस्यैव संस्करणस्य मातृकाः। भाण्डारकरशोधसंस्थाने स्थितास्तिस्रोऽपि मातृकाः संक्षिप्तस्यैव संस्करणस्य विद्यन्ते। उपलब्धा अप्येता मातृका नातीवोपयोगिन्य आसन्नत एव संस्करणेऽस्मिन्। सन्ति तिस्रो मातृका विस्तृतस्य संस्करणस्य अडयारपुस्तकालये, एका च वर्तते होशियारपुरस्थिते विश्वेश्वरानन्दवैदिकशोधसंस्थानपुस्तकालये। मलयालमलिपिलिखिताः सर्वा एता मातृका नहि मूलरूपेण नैव च प्रतिलिपिरूपेणोपलब्धा अद्यावधि योगतन्त्रविभागेन। दक्षिणभारत-यात्राप्रसङ्गे, राजस्थानपंजाबयात्राप्रसङ्गे च गत्वाऽपि तत्र तत्र लिप्यनभिज्ञानवशाद-सुलभतया च वाचकस्यान्यस्य नैतासामुपयोगः कर्तुमपार्यत। सुदुर्लभं चासीद् विस्तृतं संस्करणमेतदिति श्रद्धेयचरणानां योगतन्त्रविभागस्य पूर्वाध्यक्षाणां म० म० श्रीगोपीनाथ-कविराजमहोदयानामाज्ञया प्रक्रान्तं मुद्रणकार्यमेतस्य ग्रन्थस्य। कविराजमहोदयैरधीतस्य ग्रन्थस्य, कैश्चिद्विपश्चिद्वरैः कृतसंशोधनस्य वाराणसीस्थगोयनकापुस्तकालयग्रन्थस्य च साहा-य्येन संशोधिताऽस्य ग्रन्थस्य पाण्डुलिपिरुद्धृतानां ग्रन्थानां स्थलनिर्देशप्रसङ्गेन पुनरपि कृत-संशोधना साम्प्रतमभिनवेन रूपेण परिशिष्टभूमिकादिभिः संयोज्य समुपस्थाप्यते। समुप-लब्धेषु क्रमदर्शनग्रन्थेषु सर्वश्रेष्ठः सर्वाङ्गपूर्णश्चायं ग्रन्थः सर्वानिव क्रमदर्शनविषयान् क्रोडी-करोति। विषयोपस्थापनप्रसङ्गेन प्रमाणरूपेणोपन्यस्ताः शताधिका विशिष्टा ग्रन्था अत्र। एतादृशा अन्ये चोत्पलवैष्णवकृतस्पन्दप्रदीपिका-जयरथकृततन्त्रालोकविवेकप्रभृतयोऽल्पीयांस एव ग्रन्थाः सन्ति तान्त्रिके वाङ्मये, यत्र समुद्धृता भूयांसो ग्रन्थाः साम्प्रतं नाममेषतां गताः। एतद्विधानां ग्रन्थानां साहाय्येन लुप्तानामागमग्रन्थानां तत्कर्तॄणां च वचनानि संगृह्य गुरुचरणैः प्रकाशितो लुप्तागमसंग्रहस्य प्रथमो भागः। तत्पथानुवर्तिनस्तदाज्ञानुवर्तिनो वयमपि तस्य द्वितीयं भागं प्रचिकाशयिषामः। द्वितीयभागोपोद्घाते वयमुद्धृतानां ग्रन्थग्रन्थकाराणां तत्प्रतिपादितविषयाणां चैतिहासिकं सांस्कृतिकं दार्शनिकं च महत्त्वं चिख्यापयिषाम इति साम्प्रतं विरमामस्तद्व्यापारात्। ग्रन्थकारस्य तु परिचय उन्मीलितपूर्वोऽन्यत्र पुनरत्रो-न्मील्यते भङ्ग्यन्तरेण।

## महेश्वरानन्दस्तत्कृतयश्च

महेश्वरानन्दमधिकृत्य वयं नित्याषोडशिकार्णवोपोद्घाते ऋजुविमर्शिनीकारशिवानन्दपरिचयप्रसङ्गेन ( पृ० १७–१९ ) किमप्यवोचाम। तेनेदं सिद्ध्यति यदृजुविमर्शिनीकारः शिवानन्दो महेश्वरानन्दपरमगुरुः[1], चोलदेशशिरोमणिर्महाप्रकाशश्चास्य गुरुः[2]। महाराष्ट्रभुवा प्राकृतभाषया महार्थमञ्जरीं जग्रन्थ सः। चोलजनपदाभिजनो महेश्वरानन्दः पूर्वं गोरक्षनाम्ना प्रसिद्धिमाप, दीक्षोत्तरं च गुरुप्रदत्तयाऽभिनवयाऽनया संज्ञया चकासेति। सर्वमेतन्महार्थमञ्जरीपरिमलप्रामाण्येनावदामेति तत्प्रपञ्चोऽत्रानावश्यकः। महार्थमञ्जरीकारो गोरक्षापरनामधेयो महेश्वरानन्द एव नवनाथेष्वन्यतमाद् गोरक्षनाथादभिन्न इति, एष च मत्स्येन्द्रनाथस्य सकलकुलशास्त्रावतारकस्य शिष्य इति विद्वद्गोष्ठीषु बहुचर्चितो विषयो नास्मभ्यं रोचत इति च वयं नित्याषोडशिकार्णवटिप्पण्योः ( पृ० १७, ११६-११७ ) सप्रमाणं प्रत्यपादयाम। किञ्च, योगतन्त्रविमर्शिन्याः प्रथमेऽङ्के स्वकीये निबन्धे ( पृ० १५९–१६० ) ऋजुविमर्शिनीकारस्य शिवानन्दस्य समयः खीष्टत्रयोदशतमशताब्द्या अन्तिमो भागः, योगिनीहृदयदीपिकाकारस्य योगिनोऽमृतानन्दस्य समयः खीष्टचतुर्दशतमशताब्द्या अन्तिमो भागः, उभयोरनयोर्मध्ये च महार्थमञ्जरीकारस्य महेश्वरानन्दस्य स्थितिरिति वयं प्रमाणपुरस्सरमसाधयाम। अधिकं तु किञ्चिदत्रोच्यते।

यैर्विद्वद्भिर्गोरक्षनाथो मत्स्येन्द्रनाथशिष्यत्वेन साध्यते तैरेवाभिनवगुप्तप्रामाण्येन मत्स्येन्द्रनाथस्य समयो नवमी दशमी वा शताब्दी खीष्टस्य निर्धार्यते। अभिनवगुप्तस्य खलु शिष्यः क्षेमराजोऽनेकान् तन्त्रग्रन्थान्, शिवसूत्राणि, साम्बपञ्चाशच्च व्याख्यातवान्, जग्रन्थ च सव्याख्यं प्रत्यभिज्ञासूत्रं प्रत्यभिज्ञाहृदयाख्यम्। सोऽयं क्षेमराजः सादरं स्मृतो महेश्वरानन्दस्य परमगुरुणा शिवानन्देन ऋजुविमर्शिन्याम् ( पृ० २२९ )। अत्रैव शिवानन्दः क्षेमराजकृतस्य स्पन्दनिर्णयस्य शिवसूत्रविमर्शिन्याश्च भाषामानुपूर्व्या छायया वाऽनुसरति। एवं चाभिनवगुप्तेन मच्छन्दविभुरित्येवं सादरं स्मृतस्य मत्स्येन्द्रनाथस्य कथं नामाभिनवगुप्तशिष्यस्य क्षेमराजस्य ग्रन्थानुद्धर्तुः शिवानन्दस्य प्रशिष्यो महेश्वरानन्दो गोरक्षापरनामधेयः शिष्यः स्यादिति विभावयन्तु मनीषिणः। न चायं कुत्रापि मत्स्येन्द्रनाथं स्वगुरुत्वेन स्मरति। महार्थमञ्जर्यां परिमले वा प्रतिपादितैः सिद्धान्तैरपि गोरक्षनाथस्य हठयोगिनो नाथसम्प्रदायप्रवर्तकस्य सिद्धान्तानां नैव किमपि साम्यमवलोक्यत इत्युभयोः पार्थक्यमेवाङ्गीकर्तव्यम्। किञ्च, शिवानन्द ऋजुविमर्शिन्यां

---

१. महेश्वरानन्देन परमगुरुकृतित्वेनोद्धृतानां ग्रन्थानां परिचयो नित्याषोडशिकार्णवोपोद्घाते (पृ० १७-१९) प्रदत्तः।

२. गुरोर्महाप्रकाशस्येमे ग्रन्थाः परिमले स्मृताः—१. मनोनुशासनस्तोत्रम्, २. मातङ्गीस्तोत्रम्, ३. संवित्स्तोत्रम्, ४. आनन्दताण्डवविलासस्तोत्रं चेति। एतेषु संवित्स्तोत्रमेकत्र ( पृ० ६८ ) गुरुकृतित्वेन, अपरत्र ( पृ० १२४ ) च परमगुरुकृतित्वेन स्मृतम्।

( पृ० २२५ ) सोमशम्भुकृतकर्मकाण्डक्रमावलीवचनमुद्धरति । सोमशम्भुना चायं ग्रन्थः ११३० तमे वैक्रमे वत्सरे ( १०७३ ई० पूरितः । अपि च, ऋजुविमर्शिन्यामेव शिवानन्दो द्वित्रेषु स्थलेषु नागभट्टं तद्ग्रन्थस्य त्रिपुरासारसमुच्चयस्य वचनं च समुद्धरति । नागभट्टश्चायं जैनसम्प्रदाये प्रसिद्धादनेकनाटककर्तुर्हस्तिमल्लादभिन्नः प्रायः खीष्टत्रयोदशतमशताब्द्या अन्तिमे भागे लब्धस्थितिक इति समसाधि योगतन्त्रविमर्शिन्यां तत्रैव ( पृ० १५७ ) । एवं च महेश्वरानन्दो न कथमपि भवितुमर्हति नाथ-सम्प्रदायप्रवर्तको गोरक्षनाथः । गोरक्षनाथोऽपि नैव भवति साक्षाच्छिष्यो मत्स्येन्द्रनाथस्य, न च प्रातिनिध्यमाचरति मत्स्येन्द्रसिद्धान्तानामित्यन्यत्र विस्तरेण प्रतिपादयिष्यते । तस्मादुपर्युद्धृतैः प्रमाणैर्गोरक्षनाथाद्भिन्न एवायं महेश्वरानन्दः, तस्य च स्थितिकालः खीष्टचतुर्दशशताब्द्यां कस्मिंश्चित्समयेऽङ्गीकर्तव्यः ।

महेश्वरानन्दः सप्ततिसंख्याकप्राकृतगाथामयीं महार्थमञ्जरीं जग्रन्थ । शिवानन्द-मुनिविरचिते सुभगोदये सुभगोदयवासनायां सुभगोदयप्रभायां च, शिवानन्दपौत्रचिदानन्द-पुत्रश्रीकण्ठानन्दविरचितायां निष्कलक्रमचर्यायां चापि सप्ततिसंख्याका एव श्लोकाः सन्ति । रहस्यात्मकस्यास्य शास्त्रस्यैतदपि रहस्यमेव । महार्थमञ्जरीकारः स्वयमेवात्र स्वोपज्ञां प्रतिभासारसर्वस्वां विस्तृतां परिमलाख्यां व्याख्यां ख्यापयामास । अत्रैव तेन कुण्डलाभरणम्, कोमलवल्लीस्तवः, नखप्रलापः, परास्तोत्रम्, पादुकोदयः, महार्थोदयः, संविदुल्लास इत्येते ग्रन्थाः स्वकृतित्वेनोल्लिखिताः । एषु कुण्डलाभरणनखप्रलापौ केवलं नामोल्लेखमात्रेण स्मर्येते, अन्येषां ग्रन्थानां वचनान्यप्यत्र दृश्यन्ते । अत्र ५७ तमे पृष्ठे "अत्र च मदीयमेव सूक्तम्" इत्युक्त्वोद्धृतः "अश्वेषु गच्छत्सु" इत्यादिकः श्लोकस्तु सुभाषितरूपेणैव प्रकीर्णकतया लिखितः स्यात्, न तु सूक्तनामा कोऽपि ग्रन्थः । सूक्तशब्दोऽत्र शोभनोक्तिपर्यायः प्रतिभाति ।

## परिमलोद्धृता ग्रन्था ग्रन्थकाराश्च

लुप्तागमसंग्रहस्य द्वितीयभागोपोद्घातेऽत्रोद्धृता ग्रन्थग्रन्थकाराः परीक्षिष्यन्ते विस्त-रेणेत्यनुपदमेवोक्तम् । यद्वर्तते प्रस्तुतसंस्करणोपयोगि तत्तु संक्षेपेणात्र समुपस्थाप्यते उद्ध-रणस्थलगवेषणाप्रसङ्गेनोन्मीलितम् । अत्रोद्धृता भूयांसो ग्रन्था नैवोपलभ्यन्ते मुद्रिता हस्तलिखिता वा । एतादृशां ग्रन्थानां वचनानि केवलं ग्रन्थग्रन्थकारनिर्देशमुखेनैव स्थापितान्युद्धृतवचनश्लोकार्धानुक्रमण्याम् । यानि वचनानि विनैव ग्रन्थग्रन्थकारनाम-निर्देशमुद्धृतानि, तान्यपि लुप्तागमसंग्रहप्रथमद्वितीयभागसाहाय्येन तथा कृतानि । कानिचन वचनानि च साम्प्रतमप्यपेक्षन्ते ग्रन्थग्रन्थकारनामनिर्देशम् । अर्चनात्रिंशिका-मातृकाद्वयं लक्ष्मणपुरस्थसंस्कृतपरिषत्पुस्तकालये समुपलभ्यते । "बालिकारचित" ( पृ० १०८ ) इत्यादिकमत्रोद्धृतं पद्यं द्वितीयश्लोकत्वेन तत्र दृश्यते । एवमेव "सच्चित्सुखमयः" ( पृ० ३४ ) इत्यादिकः श्लोकार्धः पादसूत्रमातृकायामड्यारपुस्तकालय-स्थायां ६२१०३ संख्याङ्कितायां दृश्यते । आनन्दवर्धनाचार्यस्य ध्वन्यालोकः काव्या-

लोकपदेन, शिवानन्दस्य सुभगोदयवासना च क्रमवासनापदेनात्रोक्ता। नरेश्वरविवेकः सद्योज्योतिषा विरचितान्नरेश्वरपरीक्षानाम्नो ग्रन्थाद्भिन्न इव।[1] तन्त्रालोकनाम्नोद्धृतमुद्धरणद्वयं स्वच्छन्दनाम्नोद्धृतं[2] पङ्क्तित्रयं च नोपलब्धमस्माभिस्तन्त्रालोके स्वच्छन्दतन्त्रे च। प्रबोधपञ्चदशिका काश्मीरग्रन्थमालायां प्रकाशिताया अभिनवगुप्तकृतेर्बोधपञ्चदशिकाया भिन्ना। मदालसोक्तिनाम्नोद्धृतः श्लोको मार्कण्डेयपुराणे योगिन्या मदालसाया उपाख्याने दृश्यते। महानयप्रकाशस्य संस्करणद्वयं प्रकाशितम्। एकं काश्मीरग्रन्थमालायां प्रकाशितं प्राकृतगाथामयम्, अपरं च त्रिवेन्द्रंसंस्कृतग्रन्थमालायां प्रकाशितं संस्कृतभाषया निबद्धम्। परिमलोद्धृतानि महानयप्रकाशस्यानेकानि वचनानि त्रिवेन्द्रंसंस्करणे समुपलभ्यन्ते नोपलब्धानि च कानिचन। ग्रन्थोऽयमपूर्ण एव प्रकाशितः। संभाव्यतेऽनुपलब्धाः श्लोकास्तदंशीया एव स्युः। विज्ञानभैरव इति ग्रन्थनाम, विज्ञानभट्टारकश्च ग्रन्थकर्तुः संज्ञा। शम्भ्वैक्यदीपिका शाम्भवदीपिका, ज्ञानेन्दुकौमुदी विज्ञानेन्दुकौमुदी इत्येते अभिन्ने नामनी प्रतीयेते। शिवानन्दविरचिता शम्भुनिर्णयदीपिकैव शम्भ्वैक्यदीपिका शाम्भवदीपिका वा स्यादित्युद्धरणानां स्वरूपावलोकनमुखेन प्रतीयते। मतेशापरनामधेयस्य षड्विंशावच्छेदात्मकस्य शम्भुनिर्णयस्य व्याख्यायाः शम्भुनिर्णयदीपिकायाः शिवानन्दमुनिविरचिताया मातृका मद्रपुरीराजकीयपुस्तकालये खण्डिताऽपूर्णा चोपलभ्यते। स्तोत्रभट्टारकस्य द्विविधान्युद्धरणान्यत्र दृश्यन्ते—अनुष्टुप्छन्दोमयानि, उपजातिवृत्तग्रथितानि च। सिद्धनाथविरचितस्य क्रमस्तोत्रस्य द्वादशकालीस्वरूपबोधकाः श्लोका उपजातिवृत्तनिबद्धा जयरथेन तन्त्रालोकविवेके समुद्धृताः। अत्राभिनवगुप्तः क्रमकेलिनाम्नीं व्याख्यां जग्रन्थेति तत एव ज्ञायते। परिमले चानुष्टुप्छन्दोमयानां स्तोत्रभट्टारकश्लोकानामपि क्रमकेलिसाहचर्यं स्तोत्रभट्टारक इति क्रमस्तोत्रस्यैव संमानसूचकं नामेति ज्ञापयति। "एताश्च सृष्टिकाल्यादिव्यपदेशेन स्तोत्रभट्टारकादावुद्घाट्यन्ते" (पृ० १०१) परिमलोक्त्याऽनयापि तदेव सूच्यते। किञ्च, परिमलस्थः "कौलार्णवानन्दमयोर्मिरूपाम्" (पृ० १२६) इति स्तोत्रभट्टारकश्लोकांशस्तन्त्रालोकविवेके क्रमस्तोत्रश्लोकत्वेनोद्धृत इति क्रमस्तोत्रमेवैतत् स्तोत्रभट्टारक इति निश्चप्रचम्। अत एवास्माभिरत्र "तद्विवर्त" (पृ० १५०) इत्यादिकः श्लोकार्धः स्तोत्रभट्टारकश्लोकत्वेनाङ्कितः। अभिनवगुप्तविरचितः परमार्थसारोऽत्र परमार्थसंग्रह इति, परमार्थसारसंग्रह इति च नाम्ना स्मृतः, तत्तन्नाम्नोद्धृतानां सर्वेषां श्लोकानामेकत्रोपलम्भात्। क्रमवासनानाम्नोद्धृताः सर्वे श्लोकाः सुभगोदयवासनायां नित्याषोडशिकार्णपरिशिष्टे प्रकाशितायामुपलभ्यन्त इति सुभगोदयवासनैवात्र क्रमवासनापदेन स्मृतेति सूच्यते। शिवा-

१. "एकैकत्र च तत्त्वेऽपि षट्त्रिंशत्तत्त्वरूपता" (पृ० ६५) 'गुरुहृदयनिविष्टः शङ्करोऽनुग्रहीता' (पृ० १६९) इति च। अत्रत्यं प्रथममुद्धरणं तन्त्रालोकविवेके (३।४६) समुद्धृतं वर्तते।

२. "मुक्तानां शिवताव्यक्ति" इत्यादि "ते सर्वे बन्धना अपि" (पृ० ७०) इत्यन्तम्।

न्देन यथा सुभगोदयस्तथैव महेश्वरानन्देन महार्थोदयो रचित इति "तत्तद्देवतामन्त्रोद्धारो मदीये महार्थोदये पर्यालोचनीयः" (पृ० १०४) इति तदुक्त्यैव प्रतीयते। मुद्रितायां तन्त्रवटधानिकायाम्—"षट्त्रिंशत्तत्त्वपर्यायः" (पृ० ६७) इति परिमलोद्धृतपाठस्य स्थाने—"विद्यातत्त्वादाशिवान्तम्" (३।१६) इति पाठो वर्तते। ईश्वरसिद्धौ च मुद्रितायां द्वितीयश्लोकस्योत्तरार्धः खण्डितो दृश्यते, परिमलसाहाय्येन तु "घटवद् यदनेवं तन्नैवं खपरमाणुवत्" (पृ० १७) तदेवं पूर्यते। "अख्यातिर्यदि" (पृ० १५) इत्यादिकं पद्यं क्षेमराजेन प्रत्यभिज्ञाहृदयचतुर्थसूत्रव्याख्यायां "तदुक्तं मयैव" इत्युक्त्वोद्धृतमिति तस्यैवैतत्। "नमः प्रमातृवपुषे" (पृ० ६१) इति श्लोकार्धो योगिनीहृदयदीपिकायां (पृ० २९३) "सर्वसंविन्नदीभेदभिन्नविश्रान्तिभूमये" इति पूर्वार्धपूर्तिपुरस्सरं परापञ्चाशिकावचनत्वेनोद्धृतो नोपलभ्यते मुद्रितायां तस्याम्। महानयप्रकाशे,[1] भावोपहारे (पृ० ४४) च श्लोकोऽयं प्रत्यभिज्ञाकारकृतित्वेनोल्लिखितः। "यत्रेन्धनम्" (पृ० १०९) इत्यादिकः श्लोकः परमार्थसारविवृतौ (पृ० १४६) वीरवामनककृतित्वेनोट्टङ्कित इति तथैवात्र श्लोकानुक्रमण्यां स्थाप्यते।

### महार्थमञ्जरीप्रतिपाद्यस्य क्रमदर्शनस्येतिहासः

महेश्वरानन्दो महार्थमञ्जर्यां परिमले च महार्थ-औत्तराम्नाय-अनुत्तराम्नाय-क्रमसरणिप्रभृतिपदाभिधेयं क्रमदर्शनं व्याख्यातवान्। क्रमदर्शनमेतत् प्राधान्येन त्रिकदर्शनमनुसरतीति स्वयमेवाह सः—"श्रीमहार्थत्रिकदर्शनयोर्नात्यन्तं भेदप्रथा" (पृ० ९२) इति। कौलदर्शनतोऽप्यस्य नैव वैलक्षण्यमित्यप्युक्तं तेनैव—"अस्यामर्थस्थितिः सैव या सर्वत्र कुलागमे। किन्तु शब्दस्य शय्यान्या नात्यन्तं सा विभिद्यते॥" (पृ० १९२) इति। मतदर्शनं यद्यपि नात्र चर्चितम्, तथापि महेश्वरानन्दस्य परमगुरुः शिवानन्दो मतेशापरनामधेयं शम्भुनिर्णयं व्याख्याति। मतशास्त्र-मतोत्तरप्रभृतयो ग्रन्थाश्चोद्धृता दृश्यन्ते तत्र तत्र। "वेदाच्छैवं ततो दक्षं ततो वामं तत कुलम्। ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥" (पृ० ९२) परात्रिंशिकाव्याख्यायामभिनवगुप्तोद्धृते वचनेऽस्मिन् कुलत्रिकयोरन्तरालवर्ति दृश्यते मतदर्शनम्। एवं च क्रम-मत-कुल-त्रिकदर्शनानामन्योन्यं नात्यन्तं भेदप्रथा, उपासनाविधिषु परं भेद इति वयं भणामः। अत्र मतोपासनाविधिस्वरूपं साम्प्रतं ग्रन्थानामनुपलम्भान्नैव स्पष्टीकर्तुं शक्यते, संभाव्यते कुब्जिकामत-मतशास्त्र-मतोत्तर-मतेशादिग्रन्थानां प्रकाशने सति तदधिगतं स्यात्। दक्षिणस्रोतःप्रवृत्तेषु चतुष्षष्टिसंख्याकेषु भैरवागमेषु देवो भैरवो वक्तृरूपेण, देवी च हिमगिरितनया श्रोतृरूपेण समुपस्थाप्यते। एवमेव दृश्यते कुलागमेष्वपि। औत्तराम्नायपदाभिधेयेषु क्रमशास्त्रेषु तु भगवती काली वक्तृरूपेण, शिवभट्टारकश्च श्रोतृरूपेणोपस्थापितः। क्रमसद्भावादिशास्त्रोद्धरणेषु तदवलोकयितुं शक्यते। भैरवागमा दक्षनय इति, औत्तरागमा देव्यागमा ऊर्ध्वा-

---

[1] काश्मीरसंस्करणम्, पृ० १२

म्नायपदाभिधेयाः कुलागमाश्च वामनय इत्याख्यया परिचीयन्ते। साम्प्रतिकौ दक्षिणाचारवामाचारशब्दौ यमर्थं स्फोरयतो नहि तत्रार्थे तदात्वे प्रयुक्तावेतौ शब्दौ। केवलमेतयोर्दक्षिणवाममुखोद्गतत्वप्रयुक्तो भेदस्तदाऽवर्तत। पूजोपादानेषु तु नात्यन्तं भेदप्रथेति तत्तच्छास्त्रावलोकनतः प्रतीयते। त्रिकदर्शनं च सिद्धान्तनाम्ना[1] कदाचित्प्रसिद्धस्य शैवागमस्य क्रमकुलदर्शनयोश्च सिद्धान्तान् शिवाद्वैतप्रतिपादनपरत्वेनैकीकृत्य प्रवर्तते। अत्र हि शैवागमसिद्धान्तानाणवोपायत्वेन[2], क्रमदर्शनसिद्धान्तान् शाक्तोपायत्वेन, कुलागमसिद्धान्तांश्च शाम्भवोपायत्वेनाङ्गीकृत्यानुपायाख्यस्तुरीय उपायोऽपि वर्ण्यते। आगमदर्शनमत्रैव चूडान्तमुत्कर्षमवाप। त्रिकदर्शनानुप्राणिता एव प्रायो दृश्यन्ते साम्प्रतमुपलभ्यमाना शिवानन्दमहेश्वरानन्दप्रभृतीनां परम्पराः।

दृश्यते च भेदोऽपि कियानेतेषु शास्त्रेषु। स च बाहुल्येन वर्तते उपासापद्धतिष्वेव। कुल-मत-क्रम-त्रिकदर्शनानि सर्वाण्यद्वैतवादीन्येव। शास्त्राणामेतेषां वर्तते प्रभूतं वाङ्मयम्। तन्नास्माभिरत्र समालोचनीयम्। केवलं प्रासङ्गिकमेवात्रोपात्तव्यम्। त्रिपुरा विद्या चतुराम्नायसाधारण्यपि दक्षिणपक्षपातिनीति विद्यानन्द ( अर्थ०, पृ० ४१ ) ऊचे। इममर्थममृतानन्दोऽपि ( यो० दी०, पृ० ११० ) संमनुते। दक्षिणपक्षपातिनीतिपदेन भैरवागमानुवर्तित्वमस्याः ख्याप्यते। त्रिपुरोपासनाप्रतिपादके नित्याषोडशिकार्णवे त्रिसंख्याकं पदार्थजातं प्रतिपाद्यते। संगृह्यते च तल्लघुभट्टारकेणानेनैकेन श्लोकेन—

> देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-
> स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः।
> यत् किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं
> तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः॥ ( श्लो० ९ )

व्याख्यातं चैतत्पदार्थजातं नित्याषोडशिकार्णवचतुर्थपटलीयाद्यविंशतिश्लोकव्याख्यानेष्वन्यत्र[3] च। कौलदर्शने पिण्ड-पद-रूप-रूपातीताख्यं पदार्थचतुष्टयं व्याख्यायते। एतदानुगुण्येन शिवानन्देन ऋजुविमर्शिन्याममृतानन्देन च योगिनीहृदयसौभाग्यसुधोदयादिष्वनाख्याख्यं तुरीयं तत्त्वमङ्गीकृत्य तत्त्वचतुष्टयप्रतिपादनपरं व्याख्यातं त्रैपुरं तन्त्रम्। अर्थरत्नावल्यां विद्यानन्देन तु संकेतपद्धतिमनुसृत्य पीठपञ्चक-वामादिपञ्चक-इच्छादिपञ्चक-अकारहकारपञ्चकादीनां हतानाहतोत्तीर्णानां नादानाम्, अनिकेत-रसत्रितयादिपदानां च व्याख्यानं

---

१. "सिद्धान्तशब्दश्च पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः" (पृ० ५) इति रत्नत्रयोल्लेखिन्यामघोरशिवाचार्यः।

२. "अभेदोपायमत्रोक्तं शाम्भवं शाक्तमुच्यते। भेदाभेदात्मकोपायं भेदोपायं तदाणवम्॥" (१।२३०) इति तन्त्रालोकवचनमेतदनुगुणमेव। "विश्वोत्तीर्णमात्मतत्त्वमिति तान्त्रिकाः। विश्वमयमिति कुलाद्याम्नायनिविष्टाः। विश्वोत्तीर्णं विश्वमयं चेति त्रिकादिदर्शनविदः" ( सू० ८ व्याख्यानम् ) इति प्रत्यभिज्ञाहृदयवचनमपि समर्थयति तमेनमर्थम्।

३. द्रष्टव्यम्—ऋजुविमर्शिन्यामर्थरत्नावल्यां च (पृ० ६३-६४)।

क्रमदर्शनानुगुण्येन कृतम् । त्रिपुरसुन्दरीदण्डके—"सुस्फुटं वाममार्गस्य सर्वोत्तमत्वं समुपदिशता" इत्युक्तवता दीपकनाथसिद्धेन त्रिपुराविद्याया वाममार्गसेव्यत्वमुपदिष्टम् । एवं चैकस्यामेव त्रिपुरोपास्तौ व्याख्यातृभेदेन दृश्यते दृष्टिभेदो विधिभेदश्च । महार्थमञ्जरीकारेण स्वात्मदेवतैवोपास्यत्वेनात्राभिहिता क्रमसरणिमनुसरता । स्वात्मदेवता च—"स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा" ( ३५।१३ ) इति तन्त्रराजवचनप्रामाण्येन सेयं ललिता भगवती त्रिपुरसुन्दर्येव । अत्रैव देवतास्वरूपप्रतिपादकस्य महार्थमञ्जरीपरिमलग्रन्थस्य ( पृ० ११७-१२७ ) विनियोगो दृश्यते । स्वात्मदेवताया अस्याः सपर्याविधिप्रदर्शनमुखेनैव सर्वोऽपि महार्थोऽत्र ( पृ० ७९-११७ ) व्याख्यातः ।

तन्त्रालोकविवेककारजयरथप्रामाण्येन क्रमदर्शनस्यैतिहासिकं परिचयं समुपस्थापयद्भिः श्रीमद्भिः कान्तिचन्द्रपाण्डेयमहानुभावैः[1] शिवानन्दः क्रमदर्शनस्य प्रथम आचार्य इत्यमन्यत । अत एव सोऽवतारकनाथनाम्ना[2] तत्र स्मर्यते । क्रमकेलिग्रन्थमुद्धरता हि जयरथेनैवमुच्यते—"यथैकः श्रीमान् वीरवरः सुगृहीतनामधेयो गोविन्दराजाभिधानः, श्रीभानुकाभिधानो द्वितीयः श्रीमानेकराख्यस्तृतीयः सममेवोपदेशं पीठेश्वरीभ्य उत्तरपीठलब्धोपदेशात् शिवानन्दनाथाल्लब्धानुग्रहाभ्यः श्रीकेयूरवतीश्रीमदनिकाश्रीकल्याणिकाभ्यः प्राप्नुवन्तः । तत्राद्यः······स चेदं रहस्यं श्रीसोमानन्दाभिधानाय गुरवे संचारयाम्बभूव । द्वितीयोऽप्येवमेवास्त । तस्यैव चैषा श्रीमदुज्जटोद्भटादिनानागुरुपरिपाटीसन्ततिः, यत्प्रसादासादितमहिमभिरस्माभिरेतत् प्रदर्शितम्" ( आ० ४, पृ० १९२ ) इति । जयरथेनास्मिन्नेव प्रसङ्गे ह्रस्वनाथ-नवेरकनाथ-भोजराज-चक्रभानु[3]-भूतिराजप्रभृतय आचार्याः स्मृताः । अस्यामाचार्यपरम्परायां कल्लटशिष्यो भट्टप्रद्युम्नस्तत्त्वगर्भस्तोत्रकर्ता न दृश्यते । अत्र यद्वक्तव्यं तदस्माभिः "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" इत्याख्ये निबन्धे[4] उक्तम् । तेनायमपि क्रमदर्शनस्यैवाचार्यः प्रतीयते । अभिनवगुप्ततः प्राचीनायामस्यां काल्युपासकाचार्यपरम्परायां स्मृतः शिवानन्दो नूनं महेश्वरानन्दपरमगुरोः शिवानन्दाद्भिन्नः । महेश्वरानन्दोऽपि नैतेषु कानपि स्मरति, देवपाणिसम्प्रदायानुप्रविष्टत्वं चात्मनः ख्यापयति (पृ० १०४), "शक्तिः शिवो देवपाणिः" ( पृ० ९५ ) इत्यादिना च पादुकोदयवचनेन तस्यास्य सम्प्रदायस्याद्यप्रवक्तृत्वमुपपाद्यते । कोऽयं देवपाणिरिति त्वद्य न ज्ञायते, तथापि क्रमदर्शनस्यैवायमाचार्यः स्यात् । शिवानन्दो हि परमगुरुरस्य ऋजुविमर्शिन्यामन्यत्र वोपलब्धेषु ग्रन्थेषु न व्याख्याति क्रमदर्शनम् । महेश्वरानन्देन क्रमवासनापदेनोक्तायां सुभगोदयवासनायां

---

१. "अभिनवगुप्त" इत्याद्याख्यस्य ग्रन्थस्य द्वितीये संस्करणे, पृ० ४६४—४६६

२. तन्त्रालोकविवेके, आ० ४, पृ० १९५, १९७ द्रष्टव्यम् ।

३. चक्रभानुरयं विद्वग्गनचन्द्रिकायां ३०० तमे श्लोके स्मृतः । क्रमदर्शनस्यात्रोद्धृतानामन्येषां च ग्रन्थग्रन्थकर्तृणां विस्तृतः परिचयोऽस्मत्सुहृदा श्रीमता डाक्टरनवजीवनरस्तोगिमहोदयेन स्वकीये क्रमदर्शनसंबद्धे शोधनिबन्धेऽधुनावध्यप्रकाशिते समुपस्थापितः ।

४. सारस्वती सुषमा, व० २०, अ० २, पृ० १८ द्रष्टव्यम् ।

